# व्यालि शिक्षा

श्रीमन्तौ श्रीनृहरिचरणावात्मनो न्यस्य चेत-
स्यृग्वेदाष्टौविकृतिविवृतिं वैदिकश्लोकनीयाम्
व्याड्याचार्यानुमति मधुसंसूदनाख्यो गुरुश्री-
कृष्णद्वैपायनतनुभवो मस्करी चर्करीति १

महाकृतिरियं मम प्रकृतिनिर्मला हारिणी
सुधाविमतिकारिणी विशयहारिणी सेविनाम्
वचस्यमपहारिणी परविपश्चितामन्वहं
मनोभुवि विहारिणी भवतु वेदविद्याविदाम् २

जटामालादण्डरेखारथध्वजशिखाघनाः
क्रममाश्रित्य निर्वृत्ता विकारा अष्ट विश्रुताः ३

द्विपदादिक्रमाः पञ्च प्राक् क्रमाद् व्युत्क्रमात्ततः
पुनः क्रमादुच्चरिता जटात्वं प्रापिता बुधैः ४

अनुक्रमश्चोत्क्रमश्च व्युत्क्रमोऽभिक्रमस्तथा
संक्रमश्चेति पञ्चैते जटायां कथिताः क्रमाः ५

आकारगर्भत्रिपदक्रमेष्वाकारपूर्ववत्
पुनरुक्तं पदद्वन्द्वं त्रिक्रमे द्विपदभ्रमम्
हेतुर्मेव प्रवृत्तत्वाज्जटाभावं न चार्हति ६

सानुस्वाराकारगर्भत्रिक्रमप्रभृतौ यथा
द्विक्रमत्वभ्रमं हन्तुं मध्यस्थपदवेष्टनम् ७

जटायां क्रमयोः प्रातिशाख्यलक्षणलक्ष्यता
व्युत्क्रमे सा मता नैव तत्र व्याकरणं मतम् ८

षत्वणत्वे दत्वगत्वे ह्रस्वतां दीर्घतां तथा
विसृज्य संहिताधर्मान् व्युत्क्रमे पदवत् पठेत्    ९

संहितागत ओकारः पदमौकारतां व्रजेत्
क्वचित् स व्युत्क्रमे वाच्य औत्त्वेनैव जटा भवेत्    १०

क्रमेऽवसानस्यान्त्यत्वादाद्यस्य व्युत्क्रमेन्त्यतः
तयोरावर्तनं युक्तं न मध्ये त्रिक्रमादिके    ११

क्रमाणां त्रिक्रमादीनां व्युत्क्रमे मध्यमं पदम्
अप्यनावर्तितं धर्मं पदस्य प्रतिपद्यते    १२

मध्यं पदं बहिष्कृत्वा पूर्वोत्तरपदैक्यतः
विहितं पदमेकं यत्तद्विलोमजटाविधौ    १३

प्रवर्तितपदात् पूर्वं भवं त्यक्त्वा बहिष्कृतं
ब्रूयादथ शुनःशेपमेकीभावयुतं पदम्    १४

ओदन्तानां निपातानां विलोमेस्ति प्रगृह्यता
ओदन्तसंबोधनानां व्युत्क्रमे न प्रगृह्यता    १५

ईकारान्तास्त्र्यक्षराश्चेवान्ता नैव प्रगृह्यकाः
ईदूदेदोदन्तशब्दा इत्यन्तास्त्र्यक्षरा अपि    १६

प्रगृह्या एव जायन्ते संहितासंध्यभाविनः
ईदूदेतो द्विवचना ओकारास्तु तथा नहि    १७

उः प्रगृह्यत्वमेत्येष मदनादिर्वतां स्वरे    १८

उकारः प्राक्तनोकारेणैक्यादेव नपूर्वकः
व्युत्क्रमे नु उ इत्यत्राप्येति वादेशमञ्जसा    १९

परेप्युकार ओकार आव औकारलोपिनः
वकारो लुप्यतेन्यस्मिन् लुप्यते न स्वरेपरे २०

त्र्यक्षरान्तप्रगृह्याणामुकारामन्त्रितस्य च
विलोमे पदसन्धौ तु प्रगृह्यत्वं न विद्यते इति

उकार ओकारभावं गतोपि स्यात् प्रगृह्यकः २१

यत्राकारोवगृह्यत्वे दृश्यते व्युत्क्रमे तु सः
इकारेणैक्यमापन्नस्तत्रैव पररूपवान् २२

आद्यं पदद्वयं शुद्धमुत्तरं तु पदत्रयम्
अधिकं वाथ सर्वं वा समयोर्धर्चमुच्यते २३

तत्रादिमे पदद्वन्द्वे जटां कृत्वा जटीकृते
द्वितीयं समयाद्यं च संयोज्योक्त्वा जटां ततः २४

सर्वस्मिन्नुत्तरेर्धर्चे समये संहितां पठेत्
पदत्रयादौ समये शुद्धस्याद्यपदद्वये २५

संहितामवधीकृत्य ब्रूयाच्छुद्धं पदं यदि
एकमेव तदा शुद्धावध्युक्त्वा संहितां ततः २६

शुद्धमन्त्यमुपान्त्यं च समयस्यान्तिमं पदम्
योजयित्वा जटामुक्त्वा पदं शुद्धं च वेष्टयेत् २७

आद्यान्त्ये एव संशुद्धे यत्र तत्र पदे इमे
समयस्यादिमान्त्याभ्यां संयोज्य कथयेज्जटाम् २८

आद्यमध्ये एव शुद्धे पदे द्वे यत्र तत्र तु
आद्ये तल्लग्नसमयस्याद्योपेते जटाविधिः

समयस्योत्तरस्यादियुक्ते मध्ये जटाविधिः २९

यत्र प्राक्समयस्तत्र शुद्धांशाद्यद्वयावधि
संहितां संपठन्नेव विदध्याच्छुद्धयोर्जटाम् ३०

यत्राद्यांशो भवेच्छुद्धः समयश्चोत्तरांशकः
पूर्वांशान्त्ये तत्र पश्चात् समयाद्यपदेन च
योजयित्वा जटां तत्र जटाविकृतिकोविदः ३१

प्लुतिः श्रुता व्युत्क्रमेपि संहितायां पदे क्रमे
जटायां स्वरिताः सप्त प्रवर्तन्ते विलोमके ३२

तिरोविरामोथ तैरोव्यञ्जनः पादवृत्तकः
जात्योभिनिहितः क्षैप्रः प्रश्लिष्टा इति ते स्मृताः ३३

तिरोविराम उच्चैकाक्षरसर्गमुखो मतः
प्र स्तुतं च प्र चेत्यादौ तिरःपूर्वो विरामकः ३४

उपसर्गेतरोदात्तप्राक् तैरोव्यञ्जनः स्मृतः
स उक्तो व्युत्क्रमे हीळे पुरोहितमिति क्रमे ३५

विवृत्तिः स्वरितः पादवृत्तनामाभिधीयते ३६

जात्यः स्वारः स विज्ञेयोऽपूर्वो वा नीचपूर्वकः
यो वान्तो वा यकारान्तः क्व यूथ्यस्तदुदाहृतिः ३७

परनीचाकारगर्भावपूर्वौ नीचपूर्वकौ
एदोतौ स्तोऽभिनिहितौ तेऽमा सोऽयमुदाहृतिः ३८

उकारो वाथवेकारः पूर्वो वा नीचपूर्वकः
उदात्तश्चानुदात्तेन दीर्घेणोत ह्रसीयसा

योगाद्वो योऽथ तौ क्षैप्रौ न्यूषु न्वस्येत्युदाहृतिः ३९

अपूर्वो नीचपूर्वो वोच्च इर्ह्रस्वो ह्रसीयसा
इनायुक्प्रश्लिष्टतामाभीदं वीदमुदाहृतिः ४०

चतुर्विधानां कम्पानां मध्ये यः कोपि वा भवेत्
कम्पो वा तदभावो वानुक्रमे संक्रमे समः ४१

सार्धद्विमात्रकालाप्तौ जात्यक्षैप्रावदीर्घकौ
मात्राद्वयं पूर्वभागे स्यात् पश्चादर्धमात्रिका ४२

दीर्घगौ क्षैप्रजात्यौ प्रश्लिष्टाभिनिहितौ तथा
चतुर्मात्राकालवन्तोनुदात्तोदात्तनीचकाः ४३

सार्धद्विमात्राकालाप्तो भाग आद्योनुदात्तकः
मात्राकालो मध्य उच्चो नीचोन्त्यः सार्धमात्रकः ४४

जात्यादीनां कम्पनं स्यादुदात्ते स्वरिते परे
पूर्वं यतोभिनिहितादुदात्तं दृश्यते पदम्
तत्र नीचोच्चनीचात्मा कम्पः कार्यो न सर्वथा ४५

चतुर्विधाश्च स्वरिताः कम्पं प्राप्ता निमित्ततः
अनुक्रमादिरूपायां जटायां वाच्यतां गताः ४६

ब्रूयात् क्रमविपर्यासादर्धर्चस्यादितोन्ततः
अन्तं चादिं नयेदेवं क्रममालेति गीयते ४७

पदोत्तरां शिखामेव जटामार्याः प्रचक्षते ४८

क्रमादिद्वित्रिचतुःपञ्चपदक्रममुदाहरेत्
पृथक्पृथग्विपर्यस्य रेखामाहुः पुनः क्रमात् ४९

ब्रूयादादेः क्रमं सम्यगन्तादुत्तारयेदिति
वर्गे वा ऋचि वा य स्यात्पठितः स ध्वजः स्मृतः ५०

क्रममुक्त्वा विपर्यस्य पुनश्च क्रममुत्तरम्
अर्धर्चादेवमुक्तोक्तैः क्रमदण्डोभिधीयते ५१

पादशोर्धर्चशो वापि सहोक्त्या दण्डवद्रथः ५२

शिखामुक्त्वा विपर्यस्य पुनस्त्रिपदमुच्चरेत्
शिखाजटा घनः प्रोक्त इत्यष्टौ विकृतीः पठेत् ५३

इत्यष्टौविकृतीनां स्वरूपकथनं मया विरचितं यत्
तेन विष्णुर्जिष्णुः प्रीतो भवतात् भवानि परशुः ५४

इति श्रीमधुसूदनविरचिताष्टौविकृतिविवरणं समाप्तम्